The Gurukula Sanskrit Series. (No. I).






* ओ३म् *

गुरुकुलग्रन्थावलिः ।

प्रथमोग्रन्थः

# प्रथमपुस्तकम् ।

गुरुकुलमुख्याधिष्ठातृ-श्रीमुन्शीराममहोदयनिदेशेन
अर्गलपुरनिवासिश्रीपं० भीमसेनशर्म्मणा
निर्मितम् ।

यन्त्रालयस्थपण्डितैः संशोधितम् ।
तच्च
पं० अनन्तरामशर्म्मप्रबन्धेन
जालन्धरपत्तने
सद्धर्म्मप्रचारकयन्त्रालये
मुद्रितम् ।

संवत् १९६३

प्रथमावृत्तौ
१००० पुस्तकानि

मूल्यम् ⁄)

57
10 6

* ओ३म् *



# प्रथमपुस्तकम्

## प्रथमः पाठः

( पुँल्लिङ्गदेवशब्दस्य रूपाणि )

| प्रथमावि० | द्वितीयावि० | तृतीयावि० | चतुर्थीवि० |
|---|---|---|---|
| देवः | देवम् | देवेन | देवाय |
| देवौ | देवौ | देवाभ्याम् | देवाभ्याम् |
| देवाः | देवान् | देवैः | देवेभ्यः |
| **पञ्चमी वि०** | **षष्ठी वि०** | **सप्तमी वि०** | **सम्बोधनम्** |
| देवात् | देवस्य | देवे | हे देव ! |
| देवाभ्याम् | देवयोः | देवयोः | हे देवौ ! |
| देवेभ्यः | देवानाम् | देवेषु | हे देवाः ! |

एवं बुधादिशब्दानां रूपाणि ज्ञेयानि ॥

नपुंसके फलादि शब्दानां, धनम्, धने, धनानि, इति प्रथमाद्वितीययोर्विशेषः ।

## द्वितीयः पाठः

—:o:—

### ( युष्मदस्मच्छब्दरूपाणि )

| प्र० | द्वि० | तृ० | च० |
|---|---|---|---|
| त्वम् | त्वाम् | त्वया | तुभ्यम् |
| युवाम् | युवाम् | युवाभ्याम् | युवाभ्याम् |
| यूयम् | युष्मान् | युष्माभिः | युष्मभ्यम् |
| **पं०** | **ष०** | **स०** | |
| त्वत् | तव | त्वयि | |
| युवाभ्याम् | युवयोः | युवयोः | |
| युष्मत् | युष्माकम् | युष्मासु | |

---

| प्र० | द्वि० | तृ० | च० |
|---|---|---|---|
| अहम् | माम् | मया | मह्यम् |
| आवाम् | आवाम् | आवाभ्याम् | आवाभ्याम् |
| वयम् | अस्मान् | अस्माभिः | अस्मभ्यम् |
| **पं०** | **ष०** | **स०** | |
| मत् | मम | मयि | |
| आवाभ्याम् | आवयोः | आवयोः | |
| अस्मत् | अस्माकम् | अस्मासु | |

त्रिषु लिङ्गेष्विमे सरूपाः ॥

---

## तृतीयः पाठः

——:-o-:——

आगतः । पश्य । कृतम् । दत्तम् । आनय । मित्रम् । गुणाः ।

एतेषां पूर्वोक्तानां च भावार्थमवबुध्य निम्नलिखितानां वाक्यानामार्यभाषां कुरु ॥

१–देवः, आगतः । २–मां पश्य । ३–त्वया कृतम् । ४–देवाय दत्तम् । ५–देवात्' आनय । ६–तव मित्रम् । ७–युष्मासु गुणाः ।

---

## चतुर्थः पाठः

—:o:—

( सर्वनाम्नस्तच्छब्दस्य त्रिषु लिङ्गेषु रूपाणि )

( पुँल्लिङ्गे )

| प्र० | द्वि० | तृ० | च० |
|---|---|---|---|
| सः | तम् | तेन | तस्मै |
| तौ | तौ | ताभ्याम् | ताभ्याम् |
| ते | तान् | तैः | तेभ्यः |

| पं० | ष० | स० |
|---|---|---|
| तस्मात् | तस्य | तस्मिन् |
| ताभ्याम् | तयोः | तयोः |
| तेभ्यः | तेषाम् | तेषु |

—०—

## ( स्त्री लिङ्गे )

| प्र० | द्वि० | तृ० | च० |
|---|---|---|---|
| सा | ताम् | तया | तस्यै |
| ते | ते | ताभ्याम् | ताभ्याम् |
| ताः | ताः | ताभिः | ताभ्यः |

| पं० | ष० | स० |
|---|---|---|
| तस्याः | तस्याः | तस्याम् |
| ताभ्याम् | तयोः | तयोः |
| ताभ्यः | तासाम् | तासु |

## ( नपुंसके )

| प्र० | द्वि० |
|---|---|
| तत् | तत् |
| ते | ते |
| तानि | तानि |

शेषं पुंवत् ॥

एवं यच्छब्दः किं शब्दश्च ॥

## पञ्चमः पाठः

—:o:—

( वर्त्तमानार्थे लटि रूपाणि )

स वदति  त्वं वदसि  अहं वदामि
तौ वदतः  युवां वदथः  आवां वदावः
ते वदन्ति  यूयं वदथ  वयं वदामः

एवं—हसति, रक्षति, पिबति, पतति, धावति, आगच्छति, गच्छति, पठति, पृच्छति, नमतीत्यादयः।

अत्र कारकबोधः पुरुषबोधश्च कारयितव्यः ॥

एतेषां वाक्यानामार्यभाषयाऽनुवादः कार्यः—

१—अहं पठामि। ४—आवां नमावः। ७—वयं पृच्छामः।
२—सः पृच्छति। ५—तौ गच्छतः। ८—ते हसन्ति।
३—त्वं धावसि। ६—युवां पिबथः। ९—यूयं पतथ।

## षष्ठः पाठः

—:o:—

आं, अत्र। तत्र। यत्र। कुत्र। एव। एवम्। उपरि। पुरतः। मा। अधः। च। अन्तः। बहिः। समीपम्। दूरम्। न। तु। अच्छ। पृष्ठतः। बाढम्। क्व। कुतः। कथम्।

| प्र० | म० | उ० |
|---|---|---|
| वर्तते | वर्तसे | वर्ते |
| वर्तेते | वर्तेथे | वर्तावहे |
| वर्तन्ते | वर्तध्वे | वर्तामहे |

एवं कल्पते, इत्यादयः ॥

एतेषामर्थज्ञानं सम्पाद्य निम्नवाक्यानामार्यभाषा कार्या।

१-स वर्तते । ४-त्वं जानासि । ७-उपरि पश्य ।
२-दूरं धावति । ५-तस्य स्मरासि । ८-पृष्ठतो गच्छ ।
३-किं कथयति । ६-अहं पालयामि । ९-ये रक्षन्ति

---

## सप्तमः पाठः

—:o:—

| प्र० | म० | उ० |
|---|---|---|
| करोति | करोषि | करोमि |
| कुरुतः | कुरुथः | कुर्वः |
| कुर्वन्ति | कुरुथ | कुर्मः |

---

(१)--जानाति, जानीतः, जानन्ति, जानासि, जानीथः, जानी[थ] जानामि, जानीव, जानीमः, एतानि ज्ञाधातोरूपाणि ।

## ( पुँल्लिङ्गे इदंशब्दस्य रूपाणि )

| प्र० | द्वि० | तृ० | च० |
|---|---|---|---|
| अयम् | इमम् | अनेन | अस्मै |
| इमौ | इमौ | आभ्याम् | आभ्याम् |
| इमे | इमान् | एभिः | एभ्यः |

| पं० | ष० | स० |
|---|---|---|
| अस्मात् | अस्य | अस्मिन् |
| आभ्याम् | अनयोः | अनयोः |
| एभ्यः | एषाम् | एषु |

## ( स्त्री लिङ्गे )

| प्र० | द्वि० | तृ० | च० |
|---|---|---|---|
| इयम् | इमाम् | अनया | अस्यै |
| इमे | इमे | आभ्याम् | आभ्याम् |
| इमाः | इमाः | आभिः | आभ्यः |

| पं० | ष० | स० |
|---|---|---|
| अस्याः | अस्याः | अस्याम् |
| आभ्याम् | अनयोः | अनयोः |
| आभ्यः | आसाम् | आसु |

(नपुंसके)

| प्र० | द्वि० |
|---|---|
| इदम् | इदम् |
| इमे | इमे |
| इमानि | इमानि । शेषं पुंवत् । |

एतेषामर्थं हृदयङ्गतं कृत्वाऽपरेषामनुवादं कुरु ।

१–अहं करोमि ।
२–पृष्ठतः पश्यति ।
३–अनेन कृतम् ।
४–आभ्यां दत्तम् ।
५–के कुर्वन्ति ।
६–वयं कुर्मः ।
७–दूरं तिष्ठ ।
८–बाढं दृष्टम् ।
९–कुत आगतः ।

---

## अष्टमः पाठः

| प्र० | म० | उ० |
|---|---|---|
| अस्ति | असि | अस्मि |
| स्तः | स्थः | स्वः |
| सन्ति | स्थ | स्मः |

---

(१)-पूर्वमप्रदर्शितान्यपि कानिचित्पदानि सार्थं प्रबोधनीयानि।

च। न। एवम्। आं। अच्छ। तु। (कति)। तर्हि। शीघ्रम्। इति। वा। यदि। तदा। झटिति। मृषा। अधुना। अपि। प्रायेण। हि। कदापि। भोः। अतीव।

( एतदर्थोऽवगन्तव्यः )

१-त्वं कोऽसि ?।
२-अहमस्मि ब्रह्मचारी।
३-यूयं किं कुरुथ ?।
४-वयं नियमेन पठामः।
५-माता पितरौ कथं वर्तेते।
६-नैव जानामि।
७-तयोर्न स्मरथ ?।
८-स्मरणं तु जायते।
९-अच्छ! पठनं कर्तव्यम्।
१०-देवदत्त! वृक्षः कम्पते।
११-वायुश्चलति किम्?।
१२-आँ! एव मेव।
१३-त्वया पाठः पठितः।
१४-मयाऽधीतः स्मृतश्च।
१५-अत्र कति बालाः ?।
१६-सार्द्धं शतम्।
१७-किं किं पठ्यते ?।
१८-उपयुक्तं सर्वमेव।

---

## नवमः पाठः

( वद्धातोर्लोटि रूपाणि। आशिषि )

| प्र० | म० | उ० |
|---|---|---|
| वदतु( वदतात् ) | वद ( वदतात् ) | वदानि |
| वदताम् | वदतम् | वदाव |
| वदन्तु | वदत | वदाम |

एवं हसत्यादीनामपि पूर्वोक्तानाम्॥

( एतदर्थावबोध्य: )

यावत् । तावत् । सुष्ठु । मुहुः । यथा । तथा । इदानीम् । प्रति । अद्य । अवश्यं । चेत् । पश्चात् । सह । सहसा । प्रातः । पुनः । उच्चैः । नीचैः । मिथः । नूनम् ।

१-त्वं मा वद ।
२-अहं किं वदानि ।
३-नहि, वयं वदाम ।
४-आगच्छत यूयं वदत ।
५-पूर्वं जलं पिबामः ।
६-यथेच्छत कुरुत ।
७-उत्तिष्ठ त्वं आवय ।
८-शृणुत मम पाठम् ।
९-अधुना भोजनस्य कालः
१०-अद्य क गतः ।
११-गुरूणामुपदेशं श्रोतुम् ।
१२-किं श्रुतन्तत्र ? ।
१३-युष्माभिः सत्यं भाषणीयम् ।
१४-चित्तं च निरोद्धव्यम् ।
१५-सर्वं निन्द्यं त्यजथ ।
१६-प्रत्यहमीश्वरं ध्यायथ ।
१७-सहसा न कुरुत ।
१८-मिथःप्रेम्णा व्यवहर्तव्यम् ।

---

## दशमः पाठः

——:०:——

| प्र० | म० | उ० |
|---|---|---|
| वर्तताम् | वर्तस्व | वर्तै |
| वर्तेताम् | वर्तेथाम् | वर्तावहै |
| वर्तन्ताम् | वर्तध्वम् | वर्तामहै |

१-इदानीं स कथं वर्तताम् ।
२-मूर्खस्य मृत्युं यावत् क्लेशः ।

३—अहं सदाचारेणावश्यं वर्ते ।
४—अपि ते तत्र तिष्ठन्ति ?।
५—साम्प्रति किं वदन्तु !।
६—तेन सह वयं गच्छाम !।
७—मुहुः पाठो विचारणीयोऽस्ति ।
८—युष्माभिः परिमितमेव भोक्तव्यम् ।
९—अलसाः समयं व्यर्थं नयन्ति ।
१०—प्रायेण न दुःखं वर्णिनाम् ।
११—ब्रह्मचर्यस्यातीव महिमाऽस्ति ।
१२—चेद्यूयं तथा वर्तध्वम् ।
१३—नूनं तावदुन्नतिः स्यात् ।
१४—स प्रातः पश्चादुत्थितः ।
१५—देवदत्त ! साधु न पठसि ?।
१६—त्वं तु सुष्ठु वदसि ।
१७—सहसा कदापि न कर्तव्यम् ।
१८—स देवदत्त उच्चैः पश्यतु ।
१९—ते तु नीचैर्वर्तन्ते ।
२०—पुनस्तेन किं कृतम् ?।
२१—इमाः शाटिकाः सुष्ठु परिधानीयाः ।
२२—त्वया ज्ञातं न वा ?।

---

## एकादशः पाठः

—:o:—

### ( विध्यर्थे लिङि रूपाणि )

| प्र० | म० | उ० |
|---|---|---|
| वदेत् | वदेः | वदेयम् |
| वदेताम् | वदेतम् | वदेव |
| वदेयुः | वदेत | वदेम |

| प्र० | म० | उ० |
|---|---|---|
| वर्तेत | वर्तेथाः | वर्तेय |
| वर्तेयाताम् | वर्तेयाथाम् | वर्तेवहि |
| वर्तेरन् | वर्तेध्वम् | वर्तेमहि |

### ( भविष्यदर्थे लृटि रूपाणि )

| प्र० | म० | उ० |
|---|---|---|
| वदिष्यति | वदिष्यसि | वदिष्यामि |
| वदिष्यतः | वदिष्यथः | वदिष्यावः |
| वदिष्यन्ति | वदिष्यथ | वदिष्यामः |

| प्र० | म० | उ० |
|---|---|---|
| वर्तिष्यते | वर्तिष्यसे | वर्तिष्ये |
| वर्तिष्येते | वर्तिष्येथे | वर्तिष्यावहे |
| वर्तिष्यन्ते | वर्तिष्यध्वे | वर्तिष्यामहे |

एवमन्येषामपि ॥

१-स यदि शीघ्रं वदेत् ।
२-तर्हि केचन तमाद्रियेरन् ।
३-अहं न तथा वर्तेय ।
४-विदुषां रीत्या वयं वर्तेमहि ।
५-धीमन्त एव साधु वदिष्यन्ति ।
६-वयं मृषा न प्रवर्तिष्यामहे ।
७-यूयं किमिति झटिति वदेत ।
८-देवदत्त ! पाठं किं विस्मरिष्यसि ? ।
९-प्रातर्गुरवो नागमिष्यन्ति ।
१०-धार्मिकं सर्वे वंस्यन्ति हि ।
११-वयं पुस्तकादिकं साधु रक्षेम ।
१२-असंयतानीन्द्रियाणि कुमार्गे धाविष्यन्ति ।
१३-किं व्यर्थं करौ चलिष्यतः ? !
१४-वायुना वृक्षाः कम्पिष्यन्ते हि ।
१५-विदुषः सर्वे पूजयिष्यन्ति लोके ।
१६-ब्रह्मचारिणो धर्मं न त्यक्ष्यन्ति ।
१७-सहायेन विना किं सेत्स्यति ।
१८-गुरुकुलस्थाः सर्वे धार्मिकाः भवेयुः ।
१९-शुद्धचित्ता धार्मिका एव भविष्यन्ति ।
२०-किन्ते निन्द्यमार्गे प्रवर्तेरन् ? ।
२१-यमादिनिष्ठाः कुमार्गे न पतेयुः ।

---

# द्वादशः पाठः

—:-०-:—

| प्र० | म० | उ० |
|---|---|---|
| अवादीत् | अवादीः | अवादिषम् |
| अवादिष्टाम् | अवादिष्टम् | अवादिष्व |
| अवादिषुः | अवादिष्ट | अवादिष्म |

एवं–अपाठीत्, अहसीत्, अधावीत्, अपात्, अनंसीत्' इत्यादीनि रूपाणि बोध्यानि ॥

| प्र० | म० | उ० |
|---|---|---|
| अवर्तिष्ट | अवर्तिष्ठाः | अवर्तिषि |
| अवर्तिषाताम् | अवर्तिषाथाम् | अवर्तिष्वहि |
| अवर्तिषत | अवर्तिढ्वम् | अवर्तिष्महि |

तदनु, प्राग्, स्नातुम्, समाप्य, पीत्वा, अधीत्य, पठित्वा, श्रुत्वा, इत्याद्यर्थो निर्देश्यः ॥

—०—

१–सुस्वरेण वेदं केचन वर्णिनोऽपाठिषुः ।

२–वेदा ईश्वरेण रचिता इत्यवादीत् ।

३–स विनयी स्वं गुरुमनंसीत् ।

४–कथं युष्माकं दिनचर्याऽभूत् ।

५–सूर्योदयात्प्रागुषसि उत्थीयते ।

६–उत्थाय पूर्वं भगवतः स्मरणं कुर्मः ।

७–तदनु शौचार्थमधिष्ठातृभिः सह गच्छामः।
८–पुनर्हस्तौ प्रक्षाल्य मुखशुद्धिः क्रियते।
९–यथास्थानं च व्यायामं कुर्वन्ति सर्वे।
१०–अल्पवयस्काश्च यथेच्छं क्रीडन्ति।
११–ततः स्नातुं गङ्गाया उपरि गच्छन्ति।
१२–सन्ध्यां समाप्याग्निहोत्रमनुतिष्ठन्ति।
१३–मिलितानां ब्रह्मचारिणामुच्चस्वरेण वेदपाठः शोभते।
१४–दुग्धं पीत्वाऽहरहः स्वाध्ययने प्रवर्तन्ते।
१५–नियतसमयमधीत्य भोजनं कृत्वा विश्राम्यन्ति।
१६–पुनर्निर्दिष्टसमये पठित्वा बहिर्गम्यते।
१७–तत्र किं कुर्वन्ति ?।
१८–व्यायामादिकं सान्ध्यं कर्म च कृत्वाऽग्निहोत्रम्।
१९–तदनु भोजनवेलाऽऽगच्छति।
२०–पुनारात्रावुपदेशादिकं श्रुत्वा शेमहे।
२१–वयन्त्वन्यथा प्रावर्तिष्महि।
२२–देवदत्तस्तथा प्रावर्तिष्ट।
२३–मां दृष्ट्वा कदापि नाहसिषुः।
२४–यूयं सज्जाः सन्तोऽधाविष्ट।
२५–पश्य ! सोऽकाले जलमपात्।

---

# त्रयोदशः पाठः

—:०:—

## ( कालज्ञानम् )

१--अष्टादश निमेषाः काष्ठा इत्युच्यन्ते ।

२--त्रिंशत्काष्ठा कला इति त्रिंशत्कलाभिः क्षणो भवति द्वादशक्षणैर्मुहूर्तश्च ।

३--षष्टिपलैरेका घटिका, ताभ्यां द्वाभ्यामेको मुहूर्त इत्यन्ये, ते तु त्रिंशदहोरात्रः ।

४--तैः सप्तभिरेकः सप्ताह इति ।

५--पञ्चदशदिवसानामेकःपक्षः। स द्विविधः। कृष्णः शुक्लश्च । ताभ्यां द्वाभ्यामेको मासः । द्वाभ्यां मासाभ्यामेकः ऋतुर्निष्पद्यते । त्रिभिर्ऋतुभिरेकमयनम्। द्वाभ्यां ताभ्यामेकं वर्षम्। एवं वर्षे प्रायो द्वादश मासाः सन्ति ।

[ तेषां नामानि ]

चैत्रः १, वैशाखः २, ज्येष्ठः ३, आषाढः ४, श्रावणः ५, भाद्रपदः ६, आश्विनः ७, कार्तिकः ८, मार्गशीर्षः ९, पौषः १०, माघः ११, फाल्गुनः १२, इति ।

[ ऋतवः षड् भवन्ति ]

वसन्तः १, ग्रीष्मः २, वर्षा ३, शरद् ४, हेमन्तः ५, शिशिरः ६, इति ।

चैत्र वैशाखौ वसन्त इत्येवं यथाक्रमं सम्बन्धः ।

६--वाराः सप्त सन्ति, यथाः—

रविः १, सोमः २, मंगलः ३, बुधः ४, गुरुः ५, शुक्रः ६, शनिः ७, ।

७--ब्रह्मचारिन् ! वसन्ते कोकिलालापः श्रूयते ।

८--ग्रीष्मे घर्माधिक्यं जायते ।

९--वर्षासु मेघा इतस्ततो धावन्ति ।

१०--शरद्याकाशो निर्मलः सम्पद्यते ।

११--हेमन्तर्तौ हिमानि जायन्ते ।

१२--शिशिरे शीतद्रव्यं प्रवर्धते ।

१३--अस्माकं विद्यामन्दिरस्थाः वर्णिनः शीतकालेऽपि प्रातरेव स्नान्ति ।

१४--स्वधर्मं पालयन्तः किं नाम कर्तुं न प्रभवन्ति ।

---

## चतुर्दशः पाठः

(अव्ययानि)

सर्वदा । चिराय । ईषत् । अन्तरा । अलम् । ऋते ।

युगपत् । आरात् । पृथक् । ह्यः । श्वः । मनाक् ।
तूष्णीम् । पुरस् । मुधा । उभयेद्युः । प्राक् । अर्वाक् ।
शनैः । सहसा । तिरस् । जातु । समन्ततः । पठितुम् ।

१–वयं सर्वदा परिमितं खादामः ।
२--यूयं चिराय क्रीडां मा कुरुत ।
३– ईषदुपकारमपि बहुलं मन्यन्ते सज्जनाः ।
४--अन्तरा त्वां कमण्डलुर्वर्तते ।
५--बहुना धनेनालमिति बुद्धिर्निरुद्योगिनाम् ।
६--विद्याया ऋते न काऽपि सुखम् ।
७--युगपदेव पुत्रौ लालयति ।
८--तस्मादारात्पुस्तकमानय।पृथग्भूत्वा त्वमुपविश।
९--ह्यो दयार्द्राः साधवः समागताः ।
१०–श्वो गणितं पठितास्मो व्याकरणं च ।
११–सूदा [ रसोइए ] मनागुन्मनसः संजाताः ।
१२--तूष्णीं भोक्तव्यं कोलाहलो न कर्तव्यः ।
१३–युष्माकं पुरो गुरवः किं वदिष्यन्ति ।
१४–मुधा समयो न यापनीयः ।
१५–किं भोः ! उभयेद्युर्विसृष्टि [छुट्टी] रस्ति ।
१६–प्राग्ब्रह्मचर्यस्य प्रतिज्ञा कृता ।
१७–अर्वाक्काष्ठासनानि निर्मितानि ।
१८–शनैः२ कथनीयं येन स्खलनं माभूत् ।

१९–सहसा किमपि नाचरणीयम् ।

२०–गुरूणां पार्श्वे तिरोभूय न स्थातव्यम् ।

२१– जात्वपि मृषा भाषणं न विधेयम् ।

२२–समन्ततो मेघा वर्षन्ति, विद्युच्च विद्योतते ।

२३–पठितुं त्वरस्व येनोपाध्यायस्तुभ्यं न क्रुध्येत् ।

—०—

## पञ्चदशः पाठः

—:०:—

दुकानदार

१–आपणिकः पण्यवीथिकायां (दूकान) वस्तूनि विक्रीणाति ।

२–अस्मिन्नुत्सवे बह्व्यस्स्त्रियो बालाश्च समागताः ।

३–महाशय ! हस्तौ प्रक्षाल्य भोजनं विधेयम् ।

४–अतिभोजनन्तु रोगस्य निदानम् ।

५–देवदत्त ! त्वं मिथ्यावादी न भवेः ।

६–अन्यथा लोकानामविश्वासः स्यात् ।

७–इमे प्रस्तरफलकेषु किञ्चिल्लिखन्ति ।

८–चित्रकाराश्च निजकृत्यं कुर्वन्ति ।

९–अस्माकम्पाठालये रुचिराः प्रतिकृतयः सन्ति ।

१०–किन्त्वं निजवस्त्रं मृगयसे ।

 



११–लेखनीं मसिपात्रञ्च गृहीत्वाऽध्येतुं सज्जो-
भव ।
१२–आर्यमर्यादा विपत्तावपि नोल्लंघनीया ।
१३–सहसा तमाहूय, वयं गच्छामः ।
१४–यदि यूयं धर्मं त्यक्ष्यथ तर्हि दुःखभाजो-
भवेत् ।
१५–युष्माभिः पठनसमये सावधानैर्भवितव्यम् ।
१६–शिशिरकाले गङ्गाया जलमतीव निर्मलं
जायते ।
१७–वर्तुलकन्दुकं मह्यं रोचते ।
१८–ते रात्रौ काष्ठशय्यायां स्वपन्ति ।
१९–घर्मसमये शरीरात्प्रस्वेदो निस्सरति ।
२०–ब्रह्मचारिणस्तव क्रन्दनं नोचितम् ।
२१–अद्य मदीयोऽपराधो भवता क्षन्तव्यः ।
२२–अत्र हास्यावसरो नास्ति ।
२३–मालिकः कुसुमानि चिनोति ।
२४–इमे सारथयः पशून्कशया ताडयन्ति ।
२५–इदानीं भृत्येन षड् वादितानि !
२६–अतोऽत्र न विलम्बितव्यम् ।
२७–अस्मद्घटीयन्त्रे पञ्च पलान्यवशिष्टानि ।

२८–एतेन वाग्वादेनालम् ।

२९–तत्र झटिति गन्तव्यम् ।

३०–तेऽपि तु श्रेणिबद्धाश्चलन्ति ।

३१–अद्य पूर्वमालेख्यं करणीयम् ।

३२–किन्त्वं मह्यं साहाय्यं दास्यसि? ।

३३–अवश्यं दास्यामि यदि त्वं मया सह कलहं न कुर्याः ।

३४–यद्यहं तथा कुर्याम्, तर्हि गुरव एव मां शिक्षयेयुः ।

---

## षोडशः पाठः ।

—:o:—

### ( पश्वादिप्रकरणम् )

१.–गावो वत्साश्च संसारमुपकुर्वन्ति ।

२–ताभ्यो जाता वृषभाः शकटं वहन्ति ।

३–धान्यक्षेत्रे च ते हलं कर्षन्ति ।

४–महिष्योऽपि दुग्धं बहु ददति ।

५–इमे महिषाः कर्णकटु शब्दायन्ते ।

६–उष्ट्राणां तेषां च स्वाभाविकं वैरम् ।

७–सर्वेषां पशूनां सिंहो राजा ।

८--शार्दूल [ बघेरा ] स्तरक्षुश्च [ चीता ] ततोऽल्पबलौ ।

९--वन्यः शूकरोतीव बलवान् ।

१०--गण्डकोऽपि [ गैंडा ] भयंकरो भवति ।

११--भल्लूका [ रीछ ] वानराश्चापि वने निवसन्ति ।

१२--शिवा [ गीदड़ी ] कदाचिद्रात्रौ रौति ।

१३--श्वाविद् [साही] गोधेरौ [गोह] त्वया दृष्टौ ?।

१४--अस्माभिस्तु धावन्तो मृगा दृष्टाः ।

१५--मकरी 'कोष्ठीकोली' इति ख्यातस्य संज्ञा ।

१६--गोसदृशो गवय इति कथ्यते ।

१७--शशः स्वभावरमणीयो भवति ।

१८--कपोतपालिका गृहस्योपरितने भागे द्रष्टव्या ।

१९--सरटः [गिरगट] पल्ली [छिपकली] च क्षुद्रजन्तून् मारयतः ।

२०--लूता [ मकड़ी ] निजष्ठीवनेन जालं रचयति।

२१--रात्रावुलूकः पश्यति।

२२--गन्धोल्या [बर्रै] वनमक्षिकया वा दष्टोऽयम् ।

२३--चटका कुलायं निर्मायाण्डानि रक्षति ।

२४--अजया सह मेषोऽपि चरति।

२५--खञ्जनः [ गोरैया ] कीदृशो, जानासि त्वं ?।

२६--कुक्कुटाः प्रातः शब्दं कुर्वन्ति।

२७--राजहंसास्तु ते चञ्चु, चरणैर्लोहितैः सिताः।

२८--दीपस्योपरि शलभाः निपतन्ति।

२९--वर्षासु खद्योता [ जुगनूं ] द्योतन्ते।

३०--अब्जानां गन्धेषु मधुकरो [भ्रमर] मुह्यति ?।

३१--एतानि केषां नामानि:-मयूरः, खगः, तित्तिरिः, मक्षिकाः, कुक्कुरः, गर्दभः, मतंगजः।

३२--आत्मनो गुणदोषेण बध्यन्ते शुकसारिकाः।

---

## सप्तदशः पाठः

(भोज्यप्रकरणम्)

१--गोधूमस्य रोटिकाःप्रायो भुञ्जते।

२--केचिद्रोगिणः कृशरां (खिचडी) सेवन्ते।

३--किमद्य महानसे (पाकशाला) पायसं (खीर) पक्वम् ?।

४--पयसः फेनान्यपि मधुराणि भवन्ति।

५--अतीव पक्वं दुग्धमेव किलाटकः (खोवा) सम्पद्यते।

६-सन्तानिकाया (मलाई) मह्यं रुचि र्वर्तते ।

७-मह्यं दाधिकं वस्तु स्वदते ।

८-तक्रेण क्वथिता जायते ।

९-अस्यां वटिका (बडी) अपि दृश्यन्ते ।

१०-शष्कुलीसदृशी माषोदरी (कचौड़ी) भवति।

११-इमाः कुण्डलिन्यः (जलेबी) पिष्टिकया निर्मिताः ।

१२-संयावा (गूंझा) अपूपाश्चैभ्यो रोचन्ते ।

१३--केचन यावनालस्य (ज्वार) लप्सिकां विदधते।

१४-ग्रीष्मर्तौ रसाला (शिखरिन) सुखकरी ।

१५-केचिच्च तस्मिन्शर्करोदकं पिबन्ति ।

१६-दुग्धाद्दध्नो वा नवनीत (मक्खन) मुत्पद्यते ।

१७-भ्रष्टाश्चणका 'होलका' इत्युच्यन्ते ।

१८-भ्रष्टायवाः 'धानाः' इत्युच्यन्ते ।

१९-पर्वतीयदेशेषु कुलत्थान् केचिदुपभुञ्जते ।

२०-सिता शर्करा च गुडस्यैव विकारः ।

२१-गुडश्चेक्षुरसाज्जायते ।

२२-किन्त्वया बिन्दुमोदका (बूंदीकेलड्डू) भक्षिताः ।

२३-हस्ताभ्यां ऋजीषमुत्तारयति ।

२४-दर्वी [कर्छली] कटाहे [कडाही] निक्षिपति ।

(१)-'कढ़ी' इति भाषा ।

२५–स्थाल्यामोदनं भुज्यते ।
२६–पानपात्रेण पानीयम्पीयते ।

---

## अष्टादशः पाठः

१–पक्वमाम्रं बलं सुखं च ददाति ।
२–आम्रबीजं ( आमगुठली ) कषायं हृदयाय हितं च ।
३–दुर्बलेन पनसं ( कटहर ) नात्तव्यम् ।
४–पक्वं कदलीफलं ( केला ) स्वादु शीतलं च ।
५–नारिकेलो (नारियल) दरे फलं जलं च भवति ।
६–तस्य जलं हृद्यं फलं तु दुर्जरम् ।
७–कालिन्दं ( तरबूजा ) शीतलं गुरु, पक्वं पित्तलमपि ।
८–खर्बूजं मिष्टमेव बल्यम् ।
९–बिल्व एव श्रीफल इति कथ्यते ।
१०–बिल्वफलमामं सेवनीयम् ।
११–पुण्यपत्तने ( पूना ) नागरङ्गा (नरंगी) भुक्ताः ।
१२–जम्बूफलानि ( जामून ) रुचिकराणि तानि ।
१३–बदरं, ( बेर ) लघुमहद्भेदेन द्विविधम् ।
१४–तत्र लघु सर्वथाऽग्राह्यम् ।

१५-प्रियाल ( पियाल ) पद्मबीजं च किं खादितम् ?।

१६-शृङ्गाटकं ( सिंगाड़ा ) जलस्य फलम् ।

१७-पूर्वदेशे केचन मधूक (महुआ) मभ्यवहरन्ति।

१८-लवणजीरकाभिश्रित मल्लिकारसं ( इमली ) पिब।

१९-परूषकं, ( फालसा ) तूतः, दाडिमः,एषु दाडिमफलस्याधिका गुणाः ।

२०-बहुवारस्य (लिहसोड़ा) गुणा वैद्यात्प्रष्टव्याः।

२१-द्राक्षा द्विविधा-सबीजा अबीजा ( किसमिस ) च।

२२-खर्जूरिका ( खजूर ) त्रिविधा। भूमिखर्जूरिका, पिण्डखर्जूरिका, खर्जूरी च। एतासु तृतीयस्या नाम छुहारेति प्रसिद्धम् ।

२३-अचोटः (अखरोट) वातादः, (बादाम) सेवं, अमृतफलं ( नासपाती ) च सुखप्रदमस्ति।

२४-मधुकर्कटी ( चकोतरा ) हिक्कां नाशयति ।

२५-निम्बुकमम्लं पाचनं दीपनं च ।

२६-अपृष्ठा त्रपुसं ( खीरा ) न सेव्यम् ।

२७-चीरिकायाः (खिरनी) कर्मरंगस्य ( कमरख ) च गुणान् जानासि ?।

---

# एकोनविंशः पाठः

१–कस्मिन्नगरे ते गृहं वर्तते ?।

२–लवपुरे यत्र बह्वयो रथ्याः ( गली ) सन्ति ।

३–वेणुकण्टकादीनां वृतेः "प्राचीर" मितिनाम ।

४–गङ्गातीरेऽनेके उटजा ( मुनिस्थान ) आसन् ।

५–अहो पुरा भारते मठावेशन ( शिल्पशाला ) प्रपादयो ( जलशाला ) बहवोऽभूवन् ।

६–वातायन ( झरोखा ) मिवान्तर्द्वारं ( खिड़की ) प्रतीयते ।

७–प्रघणे ( दर्वाजे का कोठा ) तस्य पादः स्खलितः ।

८–पटले (छत) द्वारे वा निःश्रेणिः(सीढ़ी)स्यात् ।

९–अर्गलं कपाटमवरुणद्धि ।

१०–शोधन्याऽवकरो (कूड़ा) बहिर्निष्कासनीयः ।

११–वेदिकायां पङ्को वर्तते ।

१२–चुल्ल्या उपरि ऋचीषं ( तवा ) रक्ष ।

१३–अङ्गारधानिकायां ( अंगीठी ) वन्हिरस्ति ।

१४–आस्तरण ( बिछौना ) स्योपरि, उपधानं रक्षणीयम् ।

१५–चालनीं शूर्पं (छाज) चादाय धान्यं शोधय ।

१६–घटीयन्त्रं कङ्कतं ( कङ्गी ) चैकत्र वर्तते ।

१७–व्यजन (पंखा) मानय, उष्णताऽधिकाऽस्ति ।

१८–पर्वते मयूरो नृत्यति, न वा ?।

१९–पटोलः ( पर्वल ) कारवेल्लश्च ( करेला ) कौ भवतः ?।

२०–अस्यामुपवाटिकायां कानि२ भवन्ति ।

२१–शृणु–मूलकं, कूष्माण्डकः, वास्तुकं,(बथुआ) कर्कटी(ककड़ी)तुम्बी, पलाण्डुः,(प्याज) शतपुष्पा (सौंफ) दयः ।

२२–अस्यां भूमौ खदिरवृक्षाः ( खैर ) गोक्षुरकाश्च ( गोखरू ) बहु भवन्ति ।

२३–निम्बः पिप्पलोवटश्च न दृश्यते,शाल्मलीवृक्षाः ( सैमर ) बहुत्र भान्ति ।

२४–जन्तुफलस्य ( गूलर ) पर्णानि वल्कलं वा कीदृग् ।

२५–वने, ओषध्यो लता ( बेल ) गुल्मादयश्च शोभन्ते ।

२६–होमाय समिधो घृतं चाहर ।

२७–वृन्तं, ( जिसमें फूल बँधे ) कोरकः, ( कली ) स्तवकः ( गुच्छा ) इमानि केषां नामानि ?।

---

# विंशः पाठः

(संख्याप्रकरणम्)

१–एकः। २–द्वौ। ३–त्रयः। ४–चत्वारः। ५–पञ्च। ६–षट्। ७–सप्त। ८–अष्टौ (अष्ट)। ९–नव। १०–दश। ११–एकादश। १२–द्वादश। १३–त्रयोदश। १४–चतुर्दश। १५–पञ्चदश। १६–षोडश। १७–सप्तदश १८–अष्टादश। १९–एकोन विंशति (नवदश)। २०–विंशति। २१–एकविंशति। २२–द्वाविंशति। २३–त्रयोविंशति। २४–चतुर्विंशति। २५–पञ्चविंशति। २६–षड्विंशति। २७–सप्तविंशति। २८–अष्टाविंशति। २९–एकोनत्रिंशत् (नवविंशति)। ३०–त्रिंशत्। ३१–एकत्रिंशत् ३२–द्वात्रिंशत्। ३३–त्रयस्त्रिंशत्। ३४–चतुस्त्रिंशत्। ३५–पञ्चत्रिंशत्। ३६–षट्त्रिंशत्। ३७–सप्तत्रिंशत्। ३८–अष्टात्रिंशत्। ३९–एकोनचत्वारिंशत् (नवत्रिंशत्)। ४०–चत्वारिंशत्। ४१–एकचत्वारिंशत्। ४२–द्विचत्वारिंशत् (द्वाचत्वारिंशत्)। ४३–त्रिचत्वारिंशत् (त्रयश्चत्वारिंशत्) ४४–चतुश्चत्वारिंशत्। ४५–पञ्चचत्वारिंशत्।

४६-षट्चत्वारिंशत् ४७-सप्तचत्वारिंशत् । ४८-अष्ट चत्वारिंशत् (अष्टाचत्वारिंशत्)। ४६-एकोनपञ्चाशत् (नवचत्वारिंशत्)। ५०-पञ्चाशत् ५१-एकपञ्चाशत्। ५२-द्विपञ्चाशत्। ५३-त्रिपञ्चाशत् (त्रयःपञ्चाशत्)। ५४-चतुष्पञ्चाशत्। ५५-पञ्च पञ्चाशत्। ५६-षट्पञ्चाशत्। ५७-सप्तपञ्चाशत्। ५८-अष्टौ पञ्चाशत्। ५९-एकोनषष्टि (नवपञ्चाशत्)। ६०-षष्टि। ६१-एकषष्टि ६२-द्विषष्टि। ६३-त्रिषष्टि। (त्रयष्षष्टि)। ६४-चतुष्षष्टि। ६५-पञ्चषष्टि। ६६-षट्षष्टि। ६७-सप्तषष्टि। ६८-अष्टषष्टि। ६९-एकोनसप्तति (नवषष्टि)। ७०-सप्तति। ७१-एकसप्तति। ७२-द्विसप्तति। ७३-त्रिसप्तति (त्रयस्सप्तति)। ७४-चतुस्सप्तति। ७५-पञ्चसप्तति। ७८-षड्सप्तति। ७७-सप्तसप्तति। ७८-अष्टौसप्तति। ७९-एकोनाशीति (नवसप्तति)। ८०-अशीति। ८१-एकाशीति। ८२-द्व्यशीति। ८३-त्र्यशीति। ८४-चतुरशीति। ८५-पञ्चाशीति। ८६-षडशीति। ८७-सप्ताशीति। अष्टाशीति। ८९-एकोननवति (नवाशीति)। ९०-नवति। ९१-एकनवति। ६२-द्विनवति। ९३-त्रिनवति (त्रयोनवति)। ९४-चतुर्नवति। ९५-पञ्चन-

वति । ९६-षरणवति । ९७--सप्तनवति । अष्टन-वति । ९९–नवनवति [एकोनशतम्] । १००--शतम् । २००--द्वे शते । ३००--त्रीणि शतानि । ४००--चत्वारि शतानि । ५००–पञ्च शतानि । ६००--षड् शतानि । ७००--सप्त शतानि ।८००--अष्टौ शतानि । ९००--नव शतानि । १०००--सहस्रम् ।

एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं खर्वनिखर्वमहापद्मशंकवस्तस्मात् ॥ जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः । संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैः ॥ १ ॥ इति बोध्यम् ॥

शुभम् ।



## सूचना

---

विदित हो कि हमारे यहाँ संस्कृत, अंग्रेज़ी और हिन्दी की छपाई का काम अति शुद्धतापूर्वक होता है। इस के अतिरिक्त बेल, बूँटे, स्टोरियो, ब्लाक आदि अनेक प्रकार के सुन्दर सुन्दर सामान, बम्बई और कलकत्ते से मँगाये गये हैं। जाब, टेबिल और फेन्सी का काम बहुत अच्छा होता है। और अन्य प्रेसों की अपेक्षा छपाई भी कम लीजाती है। कृपया एक वार परीक्षा कर देखिये॥

## प्राप्तव्य-संस्कृतपुस्तक

| | | | |
|---|---|---|---|
| अष्टाध्याय्याः पूर्वार्द्धम् ( सवृत्तिकम् ) | .... | मू० | २) |
| संस्कृताङ्कुरः | .... .... .... | ,, | =) |
| आर्य्यसूक्तिसुधा | .... .... .... | ,, | ।) |
| काव्यलतिका | .... .... .... | ,, | ।।।) |
| नामिकः | .... .... .... | ,, | =)।। |
| सन्धिविषयः | .... .... .... | ,, | =) |
| अष्टाध्यायी | .... .... .... | ,, | ।) |

☞ पताः—

प्रबन्धकर्त्ता,
सद्धर्म-प्रचारक यन्त्रालय,
जालन्धर शहर।

अथवा– गुरुकुल हरिद्वार, मुख्याधिष्ठाता।

